आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १०६

# दशोपनिषदः ।

( मूलमात्रम् )

एतत्पुस्तकम्

वे० शा० शंकरशास्त्री मारुलकर इत्येतैः संशोधितम् ।

तच्च

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-
महाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५९ ।

खिस्ताब्दाः १९३७ ।



मूल्यं रूपकद्वयम् ( २ ) ।

# अथ दशोपनिषदारम्भानुक्रमणिका ।





इति दशोपनिषदां प्रारम्भानुक्रमणी ।



॥ श्रीः ॥

# दशोपनिषदां प्रस्तावना ।

पायादपायाज्जगदीश्वरो नः ।

आचार्याः खलु केऽपि पूज्यचरणा अद्वैतवादाश्रिता
वेदान्तान्दुदुहुः पुनः पुनरमी ब्रह्मामृतं निर्गुणम् ।
अन्ये तत्कविलक्षणं जगदिरे ब्रह्मामृतं सद्गुणं
श्रुत्वैवं द्विविधं क्रमेण वचनं नन्दाम नन्दाम न ॥ १ ॥

यद्यप्यष्टोत्तरशतमुपनिषदः प्रसिद्धाः । उपलभ्यन्तेऽपि च सांप्रतं मुद्रिताः । तथापि तास्वसंकीर्णतया विशुद्धात्मस्वरूपं निरूपयन्त्यो दशैव प्रामुख्येण वरीवृतति । ता एताः—

ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरि ।
ऐतरेयं च च्छान्दोग्यं बृहदारण्यकं दश ॥ २ ॥ इति ।

अत एव च ताः श्रीमच्छंकरपूज्यपादाः स्वप्रणीतभाष्यैर्मण्डयांबभूवुः । एतासां च किं कर्तव्यमिति जिज्ञासायां यादृशीं साक्षादुपनिषद्देव्या वाणीं श्रीमत्कृष्णमिश्रयतयः प्रबोधचन्द्रोदयेऽनूदितवन्तः । सैषा—

यस्माद्विश्वमुदेति यत्र रमते यस्मिन्पुनर्लीयते
भासा यस्य जगद्विभाति सहजानन्दोज्ज्वलं यन्महः ।
शान्तं शाश्वतमक्रियं यमपुनर्भावाय भूतेश्वरं
द्वैतध्वान्तमपास्य यान्ति कृतिनः प्रस्तौमि तं पूरुषम् ॥ ३ ॥ इति ।

नित्यं निर्विशेषं निर्गुणमकर्तारमभोक्तारमानन्दघनं स्वयंप्रकाशं जगन्नियन्तारमीश्वरं पुरुषं सर्वास्ता मिलित्वैकमुख्येन निरूपयन्ति नतु मायिकं कर्तारं भोक्तारमिति । तादृशात्मस्वरूपज्ञानेनाज्ञाननिवृत्तिद्वारा परब्रह्मानन्दावाप्तिलक्षणो मोक्षो भवतीति तदर्थः ।

अत्र सर्वत्र यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति, तमेव भान्तमनुभाति सर्वम्, सत्यं ज्ञानमनन्तं ब्रह्म, निष्कलं निष्क्रियम्, निर्गुणम्, ज्ञानेनैके अमृतत्वमानशुः, नान्यः पन्था अयनाय

विद्यते, इत्यादयस्तैत्तिरीयाद्युपनिषद्गताः श्रुतयः प्रमाणं द्रष्टव्याः । तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम्, इति श्रुतौ निर्विकल्पशब्देन ब्रह्मणो निर्विशेषता स्पष्टमेवाभिहिता ।

तदेतद्ब्रह्माद्वितीयम् । ब्रह्मणा संबद्धं तदसंबद्धं तच्छरीरभूतं तदंशभूतं तद्धर्मभूतं वाऽन्यत्किंचिदपि नास्ति, इदं सर्वं यदयमात्मा ( बृ० २-४-५ ) सर्वं खल्विदं ब्रह्म ( छा० ४-१४-१ ) ऐतदात्म्यमिदं सर्वम् (छा० ६-८-७) इत्यादिश्रुत्यनुरोधात् । अत एव ब्रह्माद्वैतामिति प्रसिद्धिः साधु संगच्छते ।

तदेवं 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' ( गौ० का० १७ ) इति गौडपादीयवचोनुसाराच्छुद्धचैतन्यातिरिक्तं निखिलमपि पदार्थजातमसत्यं केवलं शुद्धचैतन्यमेकमेव निर्गुणं ब्रह्म सत्यमित्यद्वैतवादिनां सिद्धान्तः ।

अत्र कश्चिद्दैवदुर्विलासवशाद्दुस्तर्कोपहतमतिः शुद्धे ब्रह्मण्येवमशुद्धमाक्षेपमुद्गिरति—

यच्छुद्धचैतन्यं निर्गुणं ब्रह्म सत्यमित्यभिधीयते न तदस्तित्वे किंचित्प्रमाणमुपलभ्यते । नहि प्रमाणाविषयं वस्तु सुरगुरुणाऽप्यस्तीति वक्तुं शक्यम् । तथा सति शशविषाणस्यापि तथात्वापत्तेः ।

कथं हि निर्गुणस्य ब्रह्मणः प्रमाणागोचरतेति चेत् । उच्यते—

प्रमाणानि खलु प्रत्यक्षानुमानागमास्त्रीणि । यद्यपि नैयायिकैर्मीमांसकैरद्वैतिभिश्च क्रमेण चत्वारि पञ्च षट् प्रमाणानीत्यङ्गीक्रियते तथाऽपि तेषां सर्वेषां पूर्वोक्तेषु त्रिष्वेवान्तर्भाव इति प्रमाणत्रयवादिनामाशयः ।

तत्र प्रत्यक्षं प्रमाणं रूपादिमत्पदार्थे प्रवर्तते । ब्रह्मणि तु न रूपं समस्ति । तदुक्तं तैत्तिरीयके श्वेताश्वतरोपनिषदि च—

न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । इति ।

संदृशे 'दृशे विख्ये च' (पा०सू०३-४-११) इति तुमर्थे केप्रत्ययः । सम्यग्द्रष्टुमस्य परमात्मनो नीलपीतह्रस्वाद्याकारं रूपं न तिष्ठति न विद्यते। अतः कश्चिदपि ब्रह्मादिस्तम्बपर्यन्ते जगति वर्तमानो जन्तुरेनं परमात्मानं चक्षुषा न पश्यति। चक्षुषो रूपैकविषयत्वं सर्वजनीनम् । तैर्थिकानां पामराणां चात्र विसंवादाभावात् । यथा रूपराहित्याच्चक्षुर्विषयत्वं नास्ति तथा शब्दादिराहित्याच्छ्रोत्रादिविषयत्वमपि नास्तीति कठैराम्नायते—

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । इति । तस्मान्न प्रत्यक्षविषयं ब्रह्म ।

व्यापकत्वादिधर्मावलम्बनमनुमानमपि न संभवति । हेतुदृष्टान्तयोरभावात् । तदुक्तममृतबिन्दूपनिषदि—

निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् । इति ।

निर्धर्मकत्वान्न तत्र हेतुः संभवति । अद्वितीयत्वाच्च न दृष्टान्तः । निर्धर्मकत्वेनाद्वितीयत्वेन च ब्रह्मणो वेदान्तेषु निर्धारितत्वात् । अनुमानस्य प्रत्यक्षपूर्वकत्वाच्च । तस्मान्नानुमानेनापि ब्रह्मलाभः संभवति ।

द्रव्यगुणजात्यादिमत्सु प्रवर्तमानश्चाऽऽगमोऽपि तद्रहितं ब्रह्माभिधातुं कथमिव प्रभवेत् । तथा चोक्तं नैष्कर्म्यसिद्धौ—

षष्ठीगुणक्रियाजातिरूढयः शब्दहेतवः ।
नाऽऽत्मन्यन्यतमोऽमीषां तेनाऽऽत्मा नाभिधीयते ॥ ४ ॥ इति ।

षष्ठी तद्वाच्यः संबन्धः क्वचिच्छब्दप्रवृत्तिनिमित्तं भवति । यथा राजपुरुषः । क्वचिद्गुणयोगः । यथा शुक्लः पट इति । क्वचित्क्रियायोगः । यथा पाचकः । क्वचिज्जातियोगः । यथा गौरश्वः पुरुषो हस्तीति । क्वचिद्रूढियोगः । यथा आकाशः द्यौः इति । अमीषां शब्दप्रवृत्तिनिमित्तानां मध्येऽन्यतमस्याप्यात्मनि असङ्गत्वादगुणत्वादविक्रियत्वादसामान्यत्वाद्प्रमाणान्तरायोग्यत्वेनागृहीतसंबन्धत्वादभावाच्च नाऽऽभिधेय आत्मेति तदर्थः । एवं चाऽऽगमेनापि न ब्रह्मलाभे प्रत्याशा धर्तव्या । तथा च भवत्संमतप्रमाणमूर्धन्यश्रुतिवचनैरेवावगम्यते न निर्गुणं ब्रह्म प्रमाणगोचरमिति ।

अद्वैतसिद्धावप्युक्तम्—' शुद्धं हि न दृश्यं किंतूपहितमेव । तच्च मिथ्यैव । नहि वृत्तिदशायामनुपहितं भवति । नचैवं शुद्धसिद्धिर्न स्यादिति वाच्यम् । स्वत एव तस्य प्रकाशत्वेन सिद्धत्वात् ' इति । तथा च निर्गुणब्रह्मणः प्रमाणावेद्यता नाम प्रमाणजन्यज्ञानाविषयताऽङ्गीकृतेति कथं प्रमाणाविषयस्यास्तिता साधनार्हेति नितान्तं संशयग्रस्तं मनः ।

अपि च ' ब्रह्म स्वप्रकाशं शशविषाणं न तथेति स्वत एव सिद्धं ब्रह्म ' इत्यद्वैतसिद्धिकारैरुक्तम् । तन्नास्मन्मनःसमाधानायालम् । यतो ब्रह्म स्वप्रकाशमिति कथं साधनीयम् । प्रमाणागोचरतया तस्य ब्रह्मणः स्वप्रकाशत्वप्रमाणं

पुरस्कर्तुं न शक्यते । प्रमाणाभावेऽपि तस्य ब्रह्मणः स्वप्रकाशत्वाङ्गीकारे शश-विषाणेऽपि स्वप्रकाशत्वं कुतो न स्वीक्रियते ।

किंच ब्रह्मणि स्वप्रकाशत्वं कीदृशम् । यदीतरावेद्यत्वमुच्यते तच्छशविषाणेऽपि समम् । अत उभयोरपि स्वप्रकाशतया ब्रह्मणः शशविषाणतुल्यत्वम् ।

एवं चाद्वैत्यभिमतब्रह्मणोऽस्तित्वे यथा न सन्ति प्रमाणानि तथा शशविषा-णास्तित्वे । सत्येवं ब्रह्म स्वप्रकाशं चेच्छशविषाणमपि स्वप्रकाशम् । अतः प्रमाणावेद्यत्वेन स्वप्रकाशत्वेन च ब्रह्मशशविषाणयोस्तुल्यत्वे कथमिवैकस्य सत्यत्वमपरस्य चासत्यत्वं साधयितुं शक्यम् । एवं च निर्गुणब्रह्मशशविषाणयोः किं वैलक्षण्यमिति ।

नैतद्भद्रम् । यतः—असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति ( तै. आ. ८ । २ ) इति श्रुतावेव ब्रह्मासत्त्ववादिनो निन्दाश्रवणात् । अस्यार्थः—लोके हि जलाहरणचाक्षुषदर्श-नादिव्यवहारविषयं घटमुद्दिश्य प्राणिनः सर्वेऽपि अयं घटोऽस्तीति ब्रुवते । तद्वि-पर्यये तु घटो नास्तीति च वदन्ति । अतो व्यवहारवासनायुक्तः पुमानव्यवहा-र्यस्य ब्रह्मणोऽसत्त्वं मन्यते । अन्यस्तु विवेकी व्यवहार्याणां भूतानां भौतिकानां च श्रुतियुक्त्यनुभूतिभिर्मायामयत्वनिश्चयादसत्त्वं प्रतिपद्यते, व्यवहारातीतस्य ब्रह्मणः श्रुत्यादिभिः सत्यत्वनिश्चयात्सत्त्वमेव प्रत्येति । तत्र ब्रह्मणोऽसत्त्वं यो वेद स पुमानसन्नेव स्यात् । अन्नमयादिकोशानामनात्मत्वस्य प्रतिपादनात्तदति-रिक्तस्य ब्रह्मणः स्वयमनङ्गीकृतत्वाच्च । यस्तु पञ्चकोशातीतं ब्रह्मास्तीति वेद तस्य पुंसस्तदेव ब्रह्म स्वरूपम् । ततो ब्रह्मास्तित्ववेदनादेनं विवेकिनं सन्तं विद्य-मानं सात्मकं जानन्ति शास्त्रपारंगता इति । एवं सामान्यत आक्षेपस्यायुक्तत्व-मुक्त्वा पुनर्विशेषतोऽप्ययुक्तत्वं प्रतिपादयितुं स आक्षेपः परीक्ष्यते । पूर्वपक्षिकृ-ताद्विवेचनादद्वैत्यभिमतब्रह्मणोऽसत्त्वे प्रमाणागोचरत्वं मूलमित्युक्तं भवतीति प्रती-यते । तत्रोच्यते—

यदुक्तं ब्रह्मणः प्रमाणागोचरत्वं तत्र प्रत्यक्षप्रमाणाविषयत्वमनुमानप्रमाणाविष-यत्वं च यदुच्यते तत्तथैवानुमन्यामहे । यद्यपि शब्दो जात्यादिविशेषरहितं वस्तु विधिमुखेन प्रतिपादयितुं न शक्नोति तथाऽपि निषेधमुखेन प्रतिपादयितुं शक्नोत्येव । अतो यदभिधीयते आगमप्रमाणागोचरं ब्रह्मेति तन्न मृष्यामहे । यदा हि शब्दो विधिमुखेन किंचिद्वस्तु प्रतिपादयितुं प्रव-

तेते तदा स शब्दस्तस्य वस्तुनो जात्यादिमत्त्वं नियमेनापेक्षते नेतरथा। द्विविधा हि वस्तुप्रतिपादशैल्यभिप्रेयतेऽभियुक्तैः। एका विधिमुखेन निषेधमुखेन चापरा। तत्र यद्वस्तु चक्षुःश्रोत्रादीन्द्रियग्राह्यरूपशब्दाद्यन्यतमगुणवद्भवितुमर्हति तदयमियमिदमित्थमिति च वक्तुं शक्यते सा विधिमुखेन वस्तुप्रतिपादनस्य रीतिः। यथा—अयं स्पर्शवान् वायुः। इयं गन्धवती पृथिवी। इदं मधुरं जलम्। इत्थमाह्लादनश्चन्द्र इत्यादिः। यच्च वस्तु न तथा गुणवत् किंतु केवलं स्वानुभवैकवेद्यमत एव च स्वसंवेद्यमिति प्रसिद्धं, न तत्पूर्वोक्तवस्तुवदीदृशं तादृशमिति निर्वक्तुं पार्यते। तादृशस्य वस्तुन इतरव्यावृत्त्यैव परिचयो दातुं शक्यः। यथा—रसालायाः कीदृशं माधुर्यमिति पृष्टे किमुत्तरयेदुत्तरयिता। न द्राक्षासदृशं न रसालफलसदृक्षं नापि मधुना सममितीतरमधुरवस्तुगतमाधुर्यप्रतिषेधद्वारेणैव तद्रसालामाधुर्यं परिचीयते। यतः स्वीयरासनानुभववेद्यं तत्। इयं निषेधमुखेन वस्तुप्रतिपादनस्य सरणिः। प्रसिद्धा हि लोकेऽपि वस्तुप्रतिपादनसरणिरियम्। यथा क्वचिन्महति जनसंमर्दे पत्युः सकाशात्परिभ्रष्टां स्वभर्तारमपश्यन्तीमत एव चकितां कांचित्कुलवधूं दृष्ट्वा तदभिप्रायज्ञेन केनचित्सज्जनेन प्रौढपुरुषेण कमप्येकं सदृक्षं युवानं तस्याः पुरत आनीय किमयं ते पतिरित्युक्ता नेति प्रतिवदति। एवं पुनरन्यं पुनरन्यमागमय्य पृष्टे सति पूर्ववदेव निषेधद्योतकं शिरःकम्पनं कुरुते। इत्थं क्रमेण यदा तस्या भर्तैव पुरतो दैववशादानीतो भवति तदाऽयमिति नायमिति वा किमपि न ब्रूते, किंतु ह्रिया मुखमवनमय्य जोषमास्ते। तेन तु तस्या जोषमासनेनायमेवास्याः पतिरिति निर्णीयते विचारशीलैः। सिद्धायामेवं द्विविधायां वस्त्वभिधानसरण्यां तत्र द्वितीयां रीतिमवलम्ब्य ब्रह्मत्वेनोपकल्पितानब्रह्मभूतान्ब्रह्मादिस्तम्बपर्यन्तान्सर्वविशेषानथ नेति नेति नेह नानाऽस्ति किंचनेत्यादिना निषिध्य तादृशनिषेधावधितया सर्वविशेषराहितमत एव सन्मात्रं ब्रह्म निरूपयन्ति उपनिषच्छब्दाः।

नन्वेवमपि याः श्रुतयो निषेधमुखेन प्रवृत्तास्तासां शुद्धब्रह्मस्वरूपबोधकत्वमस्तु। यथा 'निर्गुणम् ( चू. ७।२ ) 'निरञ्जनम् ( श्वे. ६।१९ ) अशब्दमस्पर्शम् ( का. ३।१५ ) 'यत्तदद्रेश्यमग्राह्यम्' ( मु. १।१।६ ) इत्यादौ नैतासु कश्चिद्धर्मो विधिमुखेन बोध्यते। अत्र च लक्षणावृत्त्या निर्गुणादिशब्दो निर्विशेषं ब्रह्म बोधयति। निर्गुणादिपदवाच्यत्वस्यापि वस्तुतस्तत्राभावात्। यास्तु विधिमुखेन प्रवृत्ताः 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादयः कथं

तासां शुद्धचैतन्यबोधकत्वम्। विधिमुखेन वस्त्वभिधानस्य सविशेषवस्तुतन्त्रत्वात्। नच सविशेषमेव ब्रह्माङ्गीक्रियतामिति वाच्यम् 'यत्तदद्रेश्यम्' इत्यादिपूर्वोक्तश्रुतिभिर्द्रेश्यत्वादिसर्वविशेषनिषेधेन ब्रह्मणो निर्विशेषत्वस्य सूचनात् । यदि तु ब्रह्म सविशेषमिष्येत तर्हि तेन विशेषेण सद्वितीयत्वापत्त्याऽद्वितीयश्रुतिर्व्याकुप्येत । अत एव

कीदृक्तदिति चेत्पृच्छेरीदृक्ता नास्ति तत्र हि ।
यदनीदृगताहृक् च तत्स्वरूपं विनिश्चिनु ॥ ६ ॥

इत्युक्तं संगच्छते । अन्यथा ब्रह्मणः सविशेषत्वे तद्विशेषपुरस्कारेणेदृशं तादृशमित्येवं वक्तुं शक्यतया शब्दप्रतिपाद्यता स्यादिति शुद्धब्रह्मासत्त्वशङ्कायां मूलभूतस्य प्रमाणागोचरत्वस्यैवासिद्ध्या पूर्वपक्ष एवोच्छिद्येतं इति चेदुच्यते—

'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै. ८।२ ) इति तैत्तिरीये पठ्यते । तत्र 'ब्रह्मविदाप्नोति परम्' इत्यस्मिन्पूर्ववाक्ये ब्रह्मविदित्युक्तत्वात्कीदृशं ब्रह्मेति बुभुत्सोदयात्सत्यादिभिश्चतुर्भिः पदैस्तत्स्वरूपमुच्यते । तानि च पदानि समानाधिकरणानीति विशेषणविशेष्यरूपाणि । यथा नीलं महत्सुगन्ध्युत्पलमित्यत्र विशेषणविशेष्यभावस्तद्वत् । तत्र वेद्यतया विवक्षितत्वात्प्रधानं ब्रह्म विशेष्यं सत्यादिपदानि च स्वार्थविपरीतेभ्यस्तद्ब्रह्म व्यावर्तयन्ति ।

ननु विवक्षितोत्पलाद्विपरीतान्यप्युत्पलानि विद्यन्ते । रक्तमुत्पलं स्वल्पमुत्पलमीषद्गन्धमुत्पलमित्येवं दृष्टत्वात् । अतो विवक्षितोत्पलस्य तेभ्यो व्यावृत्तये नीलादिपदानि भवन्तु। इह त्वनृतं ब्रह्म जडं ब्रह्म परिच्छिन्नं ब्रह्मेत्येवं विपरीतानि ब्रह्माणि न सन्ति । यथाऽसावादित्य एकस्तद्वद्ब्रह्माप्येकमेव । अतो व्यावर्त्याभावात्सत्यादिविशेषणानि व्यर्थानीति चेन्न । तेषां लक्षणरूपविशेषणत्वेन व्यावर्त्यसद्भावात् । द्विविधं हि विशेषणं केवलं लक्षणरूपं च । सजातीयमात्राद्व्यावर्तकं केवलविशेषणम् । यथा नीलमुत्पलमित्यत्र नीलमिति विशेषणं सजातीयाद्रक्ताद्युत्पलान्तरात्प्रकृतमुत्पलं व्यावर्तयतीति नीलमिति केवलविशेषणमित्युच्यते । यच्च स्वेतरकृत्स्नव्यावर्तकं तल्लक्षणविशेषणम् । यथा—अवकाशरूपमाकाशमित्येवं लक्षणे कृते सजातीयस्याऽऽकाशान्तरस्य व्यावर्त्यस्याभावात् स्वेतराणि विजातीयानि कृत्स्नमूर्तद्रव्याणि व्यावर्त्यन्ते तद्वत् 'सत्यं

ज्ञानमनन्तं ब्रह्म ' इत्येवं ब्रह्मलक्षणे कृते सजातीयस्य ब्रह्मान्तरस्य व्यावर्त्य-स्याभावात् सत्यादिविशेषणानि स्वेतरकृत्स्नं शुद्धचैतन्यातिरिक्तं सकलं वस्तु-जातं व्यावर्तयन्ति । स्वं शुद्धचैतन्यं ब्रह्म, स्वेतरत्कृत्स्नम्—शुद्धचैतन्यातिरिक्तं सकलं वस्तुजातं सकलं जगदिति यावत्, तच्चासत्यं जडं परिच्छिन्नं च भवतीति तादृशासत्यजडपरिच्छिन्नस्य सकलवस्तुजातस्य व्यावर्तकत्वात्सत्यादि-विशेषणं लक्षणविशेषणं भवति ।

अयं भावः—सत्यं ज्ञानमिति श्रुतौ सत्यादिपदद्वयं न सत्यत्वादिविशिष्टार्थ-बोधकम्, किंत्वसत्यजडार्थप्रतिपादकम् । निषेधमुखेन वस्तुप्रतिपिपादयिषायां नेति पदमागमयितव्यम् । तथा च ब्रह्म असत्यं न, जडं न, अन्तः परिच्छेद-स्त्रिविधः । तद्वत्परिच्छिन्नं च नेति वाक्यार्थे निष्पन्ने सत्यादिपदैरसत्यजडप-रिच्छिन्नेभ्यो ब्रह्म व्यावर्तितं भवतीति सत्यं ज्ञानमित्यादयोऽपि श्रुतयः शुद्ध-ब्रह्मपरा एव नतु सगुणब्रह्मप्रतिपादिकाः । एतदाशयेनैव शिवमहिम्नस्तोत्रे पुष्पदन्ताभिधानगन्धर्वराजेनोक्तम्—' अतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुति-रपि ' इति । अत्र कंचिद्विशेषमनुपादाय सामान्यत एव श्रुतिशब्द उपात्त इति बोध्यम् ।

नन्वेवं सत्यादिपदानामतद्व्यावृत्तिपरत्वाद्ब्रह्मशब्दार्थस्योत्पलादिशब्दार्थव-ल्लोके प्रसिद्धिविरहाद्वाक्यं शून्यपरं प्रसज्येत—

> मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः ।
> एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः ॥ ६ ॥

इति वाक्यवदिति चेत् । अत्राऽऽहुराचार्यचरणाः शारीरकभाष्ये—

' अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्ति । ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते । बृहतेर्धातोरर्थानुगमात् ' इति । अस्यायमर्थः—श्रुतौ ब्रह्मपदस्य प्रयोगान्यथानुपपत्त्या कश्चिदर्थोऽस्तीति ज्ञायते । प्रमाणवाक्ये निरर्थकशब्दप्रयोगादर्शनात् । स चार्थः 'बृह बृहि वृद्धौ' इति पाणिनिस्मृतेर्वृद्धिरूपः । वृद्धिश्चात्र निरतिशया विवक्षिता । संकोचकयोः प्रकरणोपपदयोरभावात् । श्रुतावनन्तपदेन सह प्रयोगाच्च । यदा त्वापेक्षिकवृ-द्धियुक्तं वस्तु प्रकृतं भवेदुपपदं वा किंचित्प्रयुज्येत तदा संकोचो भवेत् । नत्वेत-दुभयमप्यत्रास्ति । निरतिशया वृद्धिर्नाम निरवधिकमहत्त्वरूपा । निरवधिकम-हत्त्वं चान्तवत्त्वादिदोषसत्त्वे सर्वज्ञत्वादिगुणहीनत्वे च न संभवति । लोके गुण-

हीनदोषवतोरल्पत्वप्रसिद्धेः । एवं च परिच्छेदराहित्यं नित्यत्वमविद्यादिदोषशून्यत्वं शुद्धत्वं जाड्यराहित्यं बुद्धत्वं बन्धकालेऽपि स्वतो बन्धाभावो मुक्तत्वमित्युक्तं भवतीति ब्रह्मशब्देन तत्तद्गुणदोषाभावाश्रयतया निर्विशेषमेव ब्रह्म सिध्यति ।

नचाभावेन ब्रह्मणः सविशेषत्वापत्तिरिति वाच्यम् । अभावस्य विशेषत्वेऽङ्गीकृते त्वभावस्य भावत्वापत्तौ स्वरूपहानिरेव स्यात् । अत एव श्रीमद्व्यासचरणैर्योगसूत्रभाष्ये (पा. १ सू. ९)' अनुत्पत्तिधर्मा पुरुष इत्युत्पत्तिधर्मस्याभावमात्रमवगम्यतेन तु पुरुषान्वयी धर्मः ' इत्युक्तम् ।

ननु सदेव सोम्येदमग्र आसीत् ( छा. ६।२।१ ) इति श्रुतिः परब्रह्मणः सद्रूपत्वं स्पष्टमेवाभिधत्ते। सच्छब्दश्चासधातोः शतृप्रत्ययेन निष्पन्नत्वादस्तित्वप्रवृत्तिनिमित्तक इत्यास्तित्वेन ब्रह्मणः सविशेषत्वापत्तिरवर्जनीयेति चेन्न । अस्तित्वस्य विशेषत्वं सर्वथा वक्तुमशक्यम् । अस्तित्वं हि या सामान्यस्य परा काष्ठा तादृशसर्वसामान्यस्वरूपभूतम् । तस्य विशेषत्वे गृह्यमाणे यत्सामान्यनिरूपितं विशेषत्वं तस्यैव निरुक्तमास्तित्वरूपत्वमङ्गी क्रियतेऽस्माभिः । अस्तिशब्दस्य सर्वसामान्यभूतवस्तुवाचकत्वादिति ध्येयम् ।

निर्विशेषशुद्धब्रह्माङ्गीकारादेव ' यतो वाचो निवर्तन्ते ' (तै. २।४ ) इति श्रुतौ प्रतिपादितं ब्रह्मणो वागविषयत्वं संगच्छते । अन्यथा ब्रह्मणः सगुणत्वेन वाग्विषयत्वात्तदसंगतिरेव स्यात् । एवं च निषेधमुखेन वस्तुप्रतिपादनप्रक्रियामवलम्ब्य सत्यं ज्ञानमित्यादयः सर्वा अपि श्रुतयो निर्विशेषशुद्धब्रह्मनिरूपिका भवन्तीति शुद्धे ब्रह्मणि शब्दः प्रमाणं भवत्येव अत एवोक्तं वाजसनेयिश्रुतौ—' तं त्वौपनिषदं पुरुषं पृच्छामि ' इति औपनिषदमित्यत्र ' सर्वं वाक्यं सावधारणमसति बाधके ' इति न्यायेनोपनिषत्स्वेवाधिगत इति विगृह्णन्ति ।तथाऽन्यत्रापि—' नावेदविन्मनुते तं बृहन्तम् ' इति । शारीरभाष्येऽपि ' शास्त्रयोनित्वात् ' (ब्र. सू. १।१।३) इत्यस्य द्वितीयवर्णके शास्त्रं योनिर्ज्ञप्तिकारणं यस्य ब्रह्मण इत्यर्थो वर्णितः । यदि च शुद्धं ब्रह्म सर्वथा प्रमाणजन्यज्ञानाविषयं तर्हि कथं शब्दप्रमाणैकगम्यस्य ब्रह्मणोऽभिधदत्यः श्रुतिस्मृतयः संगच्छेरन् । सत्येवमनादिदुर्वासनागृहीतद्वैतदुराभिमानपिशाचाधिष्ठितकंधरादपरिसमाप्तनष्टचर्यात्त्वत्तोऽन्यः क इव स्वकपोलकल्पितं प्रमाणाविषयत्वमभिप्रेत्य शुद्धस्य ब्रह्मणोऽसत्त्वमाशङ्केत ।

नन्वेवं भवतु शुद्धस्य ब्रह्मणः प्रमाणजन्यज्ञानविषयत्वं भवतु च तावता तस्यास्तित्वं सिद्धम्। कथं तस्य स्वप्रकाशत्वं वक्तुं शक्यम्। नहि घटपटादयः पदार्थाः प्रत्यक्षसिद्धा इति तेषां स्वप्रकाशत्वं केनाप्यङ्गीक्रियते। उच्यते। घटादयः पदार्था जडत्वान्न स्वप्रकाशाः किंतु परप्रकाश्या एव । ब्रह्म तु न तथा जडं, किंतु ज्ञानस्वरूपम् । सत्यं ज्ञानमिति श्रुतेः। ज्ञानं च स्वप्रकाशमित्यनुभवसाक्षिकमिति सूर्यवत्स्वप्रकाशं ब्रह्मेति युज्यते वक्तुम् ।

ननु ज्ञानस्वरूपत्वेऽङ्गीकृतेऽपि यदि ज्ञानं स्वप्रकाशं स्यात्तर्हि ब्रह्मणो ज्योतिर्वत्स्वप्रकाशत्वं युज्येत नान्यथा । ज्ञानं तु न स्वप्रकाशं किंतु प्रमाणान्तरगम्यमेवेत्यभिप्रेयतेऽभियुक्तैः । अङ्गीकृतं ज्ञानस्यानुव्यवसायाख्यज्ञानान्तरगम्यत्वं नैयायिकैरिति चेत् ।

नैतद्युक्तम्—ज्ञानस्यानुव्यवसायगम्यत्वेऽनुव्यवसायस्यापि ज्ञानत्वाविशेषात्तस्यानुव्यवसायान्तरगम्यत्वं तस्याप्यनुव्यवसायान्तरगम्यत्वमित्यनवस्था प्रसज्येत। साऽसावनवस्था मा प्रसाङ्क्षीदिति ज्ञानस्य स्वप्रकाशत्वं त्वयाऽपि वाच्यमेव ।तदेवं प्रमाणजन्यज्ञानस्यापि स्वप्रकाशत्वेऽवश्यमङ्गीकर्तव्ये सति किमु वक्तव्यं ब्रह्मस्वरूपभूतं ज्ञानं स्वप्रकाशमिति । आम्नातं च ब्रह्मणः स्वप्रकाशत्वम् ‘ तमेव भान्तम् ’ ( मु. २।२।१० ) इति श्रुतौ ।

एवं च यथा प्रत्यक्षसिद्धः सूर्यः स्वमण्डलप्रकाशनाय मण्डलव्यतिरिक्तं बाह्यं कारणं प्रदीपादि नापेक्षते तथा प्रमाणसिद्धं शुद्धं ब्रह्मापि ज्ञानस्वरूपत्वात्स्वात्मावबोधाय स्वात्मातिरिक्तं नान्यत्साधनमपेक्षत इत्येवंरूपं ब्रह्मणः स्वप्रकाशत्वम् । एतदनुसंधायैवाद्वैतसिद्धिकारैरुक्तम्—‘ स्वप्रकाशत्वं हि स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वम् ’ ( अ. सि. पृ. २८० ) इति । अत्र स्वस्मादतिरिक्तानपेक्षाकथनेन स्वप्रकाशत्वे स्वापेक्षाऽपेक्षितैवेति स्पष्टमेवाभिहितम् । शशविषाणस्थले तु स्वमेव नास्तीति कुतस्तस्य स्वातिरिक्तानपेक्षत्वमिति त्वमेव विचाराय । एतेन ‘ ब्रह्मणि कीदृशं स्वप्रकाशत्वम्, इतरप्रमाणागम्यत्वं चेत् ’ इत्यादि निरर्गलप्रलपनं द्वैतवादिभूतावसंसर्गविलसितमिति गर्भस्रावेणैवोच्छिन्नम्।

नच ब्रह्मणः शास्त्रगम्यत्वे धर्माधर्मयोरिव परोक्षबोधः शङ्कनीयः । दृष्टान्तस्यात्र विषमत्वात् । अपरोक्षस्वभावं हि ब्रह्म । ‘ यत्साक्षादपरोक्षाद्ब्रह्म ’ इति श्रुतेः। धर्माधर्मौ तु परोक्षस्वभावाविति वैषम्यम् ।

किंच निर्विशेषत्वात्प्रमाणाविषयत्वमङ्गीकुर्वन्यः शुद्धब्रह्मणि प्रामाण्यं संदिहानः पूर्वपक्षी प्रष्टव्यः—प्रमाणानां प्रमाणान्तरविषयत्वमभिप्रेयते न वा ।

२

यदि ब्रूषे प्रमाणानां प्रमाणान्तरविषयत्वमभ्युपगम्यते तदा तेषामपि प्रमाणान्तराणां प्रमाणान्तराविषयत्वं वाच्यमित्यनवस्थाप्रसङ्गः । तत्परिजिहीर्षया न प्रमाणानां प्रमाणान्तराविषयत्वमिति चेद्वक्षि तदा प्रमाणान्तराविषयत्वात्प्रमाणानामप्रमाणत्वं स्यात् । तथा च सर्वव्यवहारोच्छेदः प्रसज्येत । अथ यदि न प्रमाणानामप्रमाणत्वं किंतु प्रमाणसिद्धत्वमेव । न तदर्थं प्रमाणान्तरापेक्षा । किंतु प्रदीपस्य स्वप्रकाशत्वमिव प्रमाणानां स्वयंप्रमाणत्वमेवेति चेद्ब्रूयास्तर्हि प्रमाणान्यपि यतः प्रमाणत्वं प्राप्नुवन्ति तादृशस्य सर्वप्रमाणोपजीव्यस्य शुद्धचिद्रूपस्य ब्रह्मणः स्वयंप्रकाशत्वं कुतो नाभ्युपगम्यते । एतेन यदुक्तम्—'ब्रह्म स्वप्रकाशं शशविषाणं तु न तथेति स्वत एव सिद्धं ब्रह्मेत्यद्वैतसिद्धावुक्तं तन्नास्मन्मनःसमाधानायालम्' इति तदेव नास्मन्मनःसमाधानायालम् । यतः स्वयंप्रमाणत्वेन प्रमाणानां स्वतःसिद्धत्ववत्स्वयंप्रकाशत्वेन ब्रह्मणः स्वत एव सिद्धत्वात् ।

ननु किमर्थमिदं निर्विशेषं निर्गुणं ब्रह्मेष्यते । माऽस्त्वेतादृशं ब्रह्म किंतु द्वैतवाद्यभिमतब्रह्मवत्सविशेषं सगुणं चैवास्तु । तेनैव जगदुत्पत्तिस्थितिलयानां सिद्धत्वात् । सत्यं ज्ञानमित्यादयः श्रुतयोऽप्याञ्जस्येन तत्प्रतिपादयितुं शक्नुवन्तीति न तदस्तित्वे शङ्कापङ्कलेशोऽपीति चेन्न—

ब्रह्मस्वरूपं हि श्रुत्येकसमधिगम्यं यथाश्रुत्येवाङ्गीकर्तव्यम् । श्रुतिषु च क्वचित्सविशेषं ब्रह्म वर्ण्यते । यथा—यतो वा इमानि भूतानि जायन्ते ( तै. ३।१।१ ) यः सर्वज्ञः सर्ववित् ( मु. १।१।९ ) विज्ञातारमरे केन विजानीयात् ( बृ. २।४।१४ ) अत्र जगज्जन्मादिकर्तृत्वं तदुपयुक्ताः सर्वज्ञत्वादयो विशेषा श्चाभिहिताः । क्वचित्तु निर्विशेषम् । यथा—अस्थूलमनणु, यत्तदद्रेश्यमग्राह्यम्, ( मु. १।१।६ ) तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ( ब्र. बि. ८।९ ) । अत्र स्थूलत्वादिविशेषाणां निषेधः प्रतिपादितः । तथा क्वचित्सगुणं ब्रह्मोपदिश्यते । यथा—सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१ ) सत्यकामः सत्यसंकल्पः ( छा. ८।७।१ ) विज्ञानमानन्दं ब्रह्म. ( बृ. ३।९।२८ ) । अत्र सत्यानन्दादयो गुणा अभिहिताः । क्वचित्तु निर्गुणं ब्रह्म श्रूयते । यथा—साक्षी चेता केवलो निर्गुणश्च । अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ( काठक. १।३।१५ ) । निर्गुणम् ( चू. ७।१ ) । अत्र ब्रह्मणि सामान्यतो विशेषतश्च गुणनिषेधः प्रतिपाद्यते । द्विविधश्रुतिनिर्वाहाय ब्रह्मापि द्विविधमिष्यताम् । ननु द्विविधे ब्रह्मणीष्यमाणेऽद्वैतहानिः ' एकमेवाद्वितीयम् ( छा० ६ । २ ।

१ ) इत्यद्वितीयश्रुतिविरोधश्च स्यादिति चेन्न । यद्युभयोर्ब्रह्मणोः सत्यत्वं स्वीक्रियेत तदा स दोषः प्रसज्येत । उभयोः सत्यत्वं तु वक्तुमशक्यमेव । निर्विशेषसविशेषयोस्तेजस्तिमिरवद्विरुद्धस्वभावत्वात् । अतोऽन्यतरस्य सत्यत्वमपरस्य च सोपाधिकत्वान्मिथ्यात्वमवश्यमेष्टव्यम् । तत्र सविशेषस्य सत्यत्वेऽङ्गीक्रियमाणे तेन विशेषेण तस्य सद्वितीयत्वापत्त्याऽद्वैतहानिरद्वितीयश्रुतिविरोधश्च पुनस्तदवस्थ एव स्यात् ।

किंच यतो वा इमानि भूतानि जायन्ते ( तै० ३ । १ । १ ) जन्माद्यस्य यतः ( ब्र० सू० १ । १ । २ ) इत्यादिभिर्ब्रह्मणो जगज्जन्मादिकारणत्वमभिहितम् । अनपलपनीयं तदाप्येतत् । तद्यस्याऽऽञ्जस्येनोपपद्येत तस्यैव ब्रह्मणः सत्यत्वं निर्धार्यं भवति । एवं हि लोके नियमो दृश्यते ययोः सामान्यविशेषभावस्तयोरेव कार्यकारणभावः । तत्र कारणं सामान्यं कार्यं विशेषः । सामान्यत्वं च कार्यगतयावद्विशेषरहितत्वम् । यथा मृत्तिका कारणं घटशरावादिकं तु तत्कार्यम् । तत्र कारणावस्थायां मृदि घटशरावादिकार्यगतस्य कस्यापि विशेषस्यादर्शनान्मृत्कारणमित्युच्यते। घटशरावादिकं तु तज्जन्यत्वात्कार्यं भवति । यदि तु मृदि कश्चिदपि विशेषः स्यात्तर्हि न सा कारणं भवितुमर्हेत् । नहि घटः शरावं प्रति शरावो वा घटं प्रति कारणत्वेन दृश्यते लोके । उभयोः सविशेषत्वात् । एवं च कारणेन सामान्येनैव भाव्यं न विशेषेणेति नियमः सिध्यति । श्रुतौ च ब्रह्मणः कारणत्वं स्पष्टमेवाभिहितम् । तत्र यदि सगुणमेव ब्रह्म सत्यत्वेनाङ्गीक्रियेत चेच्छ्रुतौ वर्ण्यमानं जगत्कारणत्वं न संगच्छेत । तस्य सविशेषत्वात् । एवं च सविशेषस्य ब्रह्मणो जगत्कारणत्वं न संभवतीति न तत्सत्यम् । किंतु सर्वविशेषरहितस्यैव तत्संभवतीति निर्विशेषमेव ब्रह्म सर्वजगत्कारणं तदेव च सत्यम् । श्रुतावपि ‘ वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ’ ( छा० ६ । ४ । १ ) इति दृष्टान्तेन निर्विशेषस्यैव सत्यत्वं प्रदर्शितम् ।

यद्यप्येतत् ‘यतो वा इमानि भूतानि’ इति तटस्थलक्षणं सोपाधिकस्य सविशेषस्य ब्रह्मणस्तथाऽपि तत्प्रकृतिभूतस्य निर्विशेषस्य ब्रह्मणो बोधकं भवत्येव । यथा मिथ्याभूतेन प्रतिबिम्बदर्शनेन सत्यस्य बिम्बस्यावबोधो भवति तद्वत् । एवं च धर्मधर्मिभावो जगत्कारणत्वं तादृशकारणत्वोपयोगिनो गुणाः सर्वज्ञत्वादयश्चेत्येतत्सर्वं कल्पितमेवेत्यद्वैतिनां सिद्धान्तः । कल्पितस्य च मिथ्यात्वान्ना-

द्वैतहानिर्नापि श्रुतिविरोधः । एतेन गुणमणिगणविभूषितस्य ब्रह्मणो मिथ्यात्वकल्पनमप्यसमञ्जसमिति वचनमेवासमञ्जसम् । श्रुत्यैव तस्य मिथ्यात्वप्रतिपादनादिति बोध्यम् ।

आगमप्रतिपाद्यत्वं चेदं व्यवहारदशायामेव । आगमस्य प्रामाण्यमपि व्यवहारदशायामेवोपयुज्यते । मोक्षावस्थायां तस्याप्रामाण्येऽपि न क्षतिः । तदवस्थायां तदप्रामाण्यस्य 'यत्र वेदा अवेदाः' ( बृ० ४ । ३ । २२ ) इति श्रुत्यैव प्रतिपादनात् । एवं च मोक्षद्वारपर्यन्तमेवाऽऽगमस्य प्रामाण्यम् । प्रमाणशिरोमणेर्वेदस्येयं स्थितिस्तत्र का वार्ताऽन्येषां प्रमाणानाम् । सर्वेषां प्रमाणानां प्रमाणत्वं मोक्षद्वारपर्यन्तमेव । तदुक्तम्—

देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥ ७ ॥ इति ।

आ आत्मनिश्चयादिति च्छेदः । आत्मनिश्चयपर्यन्तमेव प्रामाण्यं न तदुत्तरमित्यर्थः । एवं चाद्वैतिभिर्वेदप्रमाण्यमङ्गीकृतमेव । तच्च व्यावहारिकं न पारमार्थिकमित्यन्यदेतत् । एतेन 'सत्यतयाऽङ्गीकृतं निर्गुणं ब्रह्म बोधयितुं न प्रभवन्ति वेदाः । यच्च बोधयितुं प्रभवन्ति तादृशं वियदादि निखिलं जगदनृतमेवेति तादृशानृतवस्तुप्रबोधका वेदाः कथं प्रमाणपदवीमर्हेयुः । अतः परस्य ब्रह्मणः सत्यत्वं महनीयस्याऽऽम्नायस्य प्रामाण्यं च न सिध्यति' इति यदुच्यते तदेव न सिध्यति ।

नन्वेवं भवतु शुद्धचैतन्यस्याऽऽगमप्रतिपाद्यत्वं स्वप्रकाशत्वं सत्यत्वमागमानां प्रमाणत्वं च । अस्तु च तदतिरिक्तस्य वियदादिनिखिलपदार्थजातस्यानृतत्वम् । किंतु 'शुद्धं हि ब्रह्म न दृश्यम्' ( अ. सि. पृ. २३९ ) इत्यद्वैतसिद्धिकारैरुक्तस्य ग्रन्थस्य का गतिः । अनेन हि ग्रन्थेन शुद्धस्य ब्रह्मणो यावत्प्रमाणाविषयताऽभिधित्सितेति चेन्न । अयं हि ग्रन्थो दृश्यत्वनिरुक्तिप्रकरणे पठितः । यदि च सर्वप्रमाणाविषयताऽभीष्टा स्यात्तदा प्रमाणविषयतानिरुक्तिप्रकरणेऽस्य ग्रन्थस्य विनिवेशः सर्वथाऽसंगतः स्यात् । अतः किंचित्प्रमाणाविषयताऽभीष्टेत्येव तस्य ग्रन्थस्य तात्पर्यं कल्प्यम् । तथा सति आगमप्रमाणाविषयत्वांशेन दृश्यत्वनिरुक्तिप्रकरणे पाठोऽपि युज्यते । आगमातिरिक्तप्रमाणाविषयत्वांशेन न दृश्यमिति प्रमाणविषयतानिषेधोऽपि संगच्छते । अत एवाग्रे ( २६८ पृष्ठे ) अद्वैतसिद्धिकारैरेवोक्तम्—'शब्दाजन्यवृत्तिविषत्वमेव दृश्यत्वम्' इति । तादृश-

वृत्तिविषयत्वं ‘न दृश्यम्’ इत्यनेन निषिध्यते। शब्दाजन्यवृत्तिश्च प्रत्यक्षानुमानप्रमाणजन्या वृत्तिः। एवं च तादृशवृत्तिजन्यविषयतानिषेधप्रकारेण शुद्धे ब्रह्मणि शब्दजन्यवृत्तिविषयताऽनुमोदिता भवति।

ननु यदि शुद्धस्य ब्रह्मणो वृत्तिविषयताऽङ्गीक्रियते तर्हि तस्योपहितत्वान्मिथ्यात्वं प्रसज्यते। तदुक्तमद्वैतसिद्धावेव—‘किंतूपहितमेव। (दृश्यमिति शेषः)। तच्च मिथ्यैव। नहि वृत्तिदशायामनुपहितं भवति’ इति। तच्च मिथ्येत्यनेन वृत्त्युपहितस्य मिथ्यात्वं प्रतिपाद्यते। नहि वृत्तिदशायामित्याद्युत्तरग्रन्थेन च दृश्यस्य ब्रह्मणो वृत्त्युपहितत्वमुपपाद्यते इति चेन्न। नहीत्यादिफक्किका न वृत्त्युपहितत्वोपपादनपरा किंतु वृत्तिदशायामनुपहितं नहि भवति, अपि तु भवत्येवेत्येवंरीत्या व्याख्यानेन वृत्तिदशायामप्यनुपहितत्वप्रतिपादनपरा। कथं वृत्तिदशायामनुपहितत्वं संभवनीयं तत्रोपहितत्वावश्यंभावादिति चेत्—वृत्तिरूपोपाधेः परिच्छिन्नत्वेन तदपेक्षया महतो ब्रह्मणः सर्वावच्छेदेनोपहितत्वस्य वक्तुमशक्यत्वादिति गृहाण। यद्यपि लघुनाऽप्युपाधिना स्वापेक्षया महानपि परिच्छिद्यते इत्येवं लोक उपाधेः सामर्थ्यातिशयोऽवलोक्यते। यथा लघुरप्यादर्शो महान्तमपि प्रासादं परिच्छिद्य सर्वात्मना स्वस्मिन् प्रदर्शयति तथाऽप्युपाधेयस्य परिच्छिन्नत्व एव तथा भवितुमर्हति नोपाधेयस्यापरिच्छिन्नत्वे। यथा घटेनोपाधिना जलेनोपाधिना वा व्यापक आकाशः परिच्छिद्य न सर्वांशेन स्वस्मिन् प्रदर्श्यते किंतु किंचित्प्रदेशावच्छेदेनैव स्वस्मिन्प्रदर्श्यते। अनन्तं ब्रह्मेति श्रुतेरपरिच्छिन्नं ब्रह्म न परिच्छिन्नेनोपाधिना सर्वावच्छेदेनोपहितं भवितुमर्हमिति वृत्तिदशायामप्यनुपहितमेव। तथा च न तस्य मिथ्यात्वप्रसङ्गः। सर्वात्मनोपहितस्यैव मिथ्यात्वात्।

किंच प्रमाणानि न स्वविषयत्वेन परं ब्रह्म बोधयन्ति। तदुक्तम्—‘यस्मिन् ब्रह्मणि सर्वशक्तिनिलये मानानि नो मानिनां निष्ठायै प्रभवन्ति’ ( वि. पु. ६।८।५७ ) इति। मानिनां प्रामाणिकानां मानानि प्रमाणानि निष्ठायै परिच्छेदाय न प्रभवन्ति समर्थानि न भवन्तीति तदर्थः। किंतु यदवलम्ब्य वयमस्तित्वमलप्स्महि तादृशं निखिलजगन्मूलकारणभूतं किंचित्स्यादित्येवं दूरत एव स्थित्वा सूचयन्ति।

यथा रूपवद्वस्तुप्रकाशने समर्थः प्रदीपो रूपवन्तमप्यन्धकारं स्वयं दूरत एव स्थित्वा सूचयति तद्वत्। तादृशं मूलकारणं यदि स्वयंप्रकाशत्वेन सिद्धं

न स्याच्चेत्कथमिव सर्वजगत्प्रकाशं कर्तुं शक्नुयात् । अतः स्वप्रकाशत्वेन स्वत एव सिद्धं ब्रह्मेत्यवश्यमङ्गीकर्तुमापतति । अन्यथा जगदान्ध्यं प्रसज्येतेति नेत्रे उन्मील्य निपुणं निभालय । एतदाशयेनैवाद्वैतसिद्धिकारैरुक्तम्—' स्वत एव तस्य प्रकाशत्वेन सिद्धत्वात् ' ( अ. सि. पृ. २४२ ) इति । नहि शशविषाणं तथेति आपामरं केनापि वक्तुं शक्यम् । तस्य निरुपाख्यत्वेन तुच्छत्वात् । एवं च निर्गुणस्य ब्रह्मणः स्वप्रकाशत्वेन स्वतःसिद्धत्वेन प्रमाणजन्यवृत्तिविषयत्वाभावान्न कथमपि मिथ्यात्वं शङ्कितुमपि शक्यम्, किंतु प्रमाणसिद्धास्तित्वात्परमार्थसत्यत्वं चिद्रूपत्वाच्च स्वप्रकाशत्वम् । शशविषाणस्य तु प्रमाणसिद्धास्तित्वाभावान्निःस्वरूपत्वेन तुच्छत्वाच्च मिथ्यात्वमेव । नहि शशविषाणस्यास्तिता केनापि प्रमाणेन साधयितुं शक्या । तस्य तुच्छस्वरूपत्वात् । इति महदेव वैलक्षण्यमिति सर्वथा विरवद्यं रमणीयं च खलु परं ब्रह्मेति सर्वं समञ्जसम् । एवं सति यदि कश्चिदपरमार्थबुद्धिस्तयोरवैलक्षण्यं ब्रूयाच्चेत्पुच्छविषाणसहितात्पुच्छविषाणरहिते तस्मिन् किं वैलक्षण्यं वक्तव्यमिति त्वमेव ब्रूहीत्यास्तां तावत् ।

प्रकृतमनुसरामः । नन्विमा एव दशोपनिषद आनन्दगिरिटीकानन्दितशांकरभाष्यभूषिताः सुपरिशुद्धाश्चाऽऽनन्दाश्रममुद्रणालय एव मुद्रिताः सन्तीति किमर्थमयं पुनर्मूलमात्रस्य च मुद्रणे प्रयास इति चेद्ब्रूमः । सटीकसभाष्यास्ता विस्तृतत्वादतिमहत्यः । यथैव च ता अतिमहत्यस्तथा तासां मूल्यमप्यतिमहत्पञ्चविंशतिरजतमुद्रापरिमितं भवति । अतो न ताः सर्वेषां सौलभ्येन प्राप्या भवन्ति । किंचाधीषिषूणां टीकाभाष्यादिकं नात्युपयुक्तं भवति । एतदनुसंधाय सर्वेषां सौलभ्येन प्राप्त्यर्थं हस्तधारणे भारभूतत्वपरिहारार्थं केवलसंहितया पिपठिषूणां च सौकर्यार्थं मूलमात्रस्वरूपेण पुनरिमा मुद्रिताः ।

अत्रेदं बोध्यम्—' दशोपनिषदः ' इत्ययं शब्दः समस्तो वाऽसमस्तो वा । यद्यसमस्तः, न तत्र किंचिद्वक्तव्यम् । यदि समस्तस्तर्हि केन सूत्रेण समास इति वक्तव्यम् । विशेषणं विशेष्येणेति चेत्—'दिक्संख्ये संज्ञायाम्' (पा.सू.२।१।५०) संज्ञायामेव दिक्संख्ये समानाधिकरणेन समस्येते इति नियमात्समासो दुर्लभः । अत एव पञ्च ब्राह्मणाः इत्यत्र न समास इति कौमुद्यामुक्तम् । तथा च प्रस्तावनाशीर्षके ' दशोपनिषदाम् ' इति प्रतिपृष्ठं शिरोभागे च ' दशो-

पनिषत्सु ' इति च समस्तं कथं प्रयुक्तम् । दशानामुपनिषदाम्, दशसूपनिषत्सु ' इत्येवासमस्तं प्रयोक्तुं युक्तम् । तादृशसमासस्यासाधुत्वादिति चेद्भ्रान्तोऽसि । सप्तर्षिशब्दवद्दशोपनिषदित्यस्य संज्ञाशब्दत्वात् । यथा सप्तर्षयः इत्युक्ते तत्र सप्तर्षिशब्दान्न ये केचन सप्तसंख्याका ऋषयः प्रतीयन्ते किंतु नियमेन कश्यपादयः प्रसिद्धा एवेति तेषु संज्ञाभूतोऽयं सप्तर्षिशब्दोऽतस्तत्र समासो युज्यते । एवं दशोपनिषद इति प्रयुक्ते तत्र दशोपनिषच्छब्दान्न याः काश्चन दशसंख्याका उपनिषदः प्रतीता भवन्ति किंतु ईशावास्यादय एव दश प्रतीयन्त इति तासु संज्ञाशब्दत्वेन विनियुक्तोऽयमभियुक्तैः । अतस्तत्र समासे तादृशशब्दप्रयोगे च न काऽप्यनुपपत्तिः । एतादृशकल्पनायां प्रमाणं तु वैयाकरणकेसरिरङ्गोजिभट्टात्मजकौण्डभट्टेन वैयाकरणभूषणसारे प्रयुक्तः ' दशलकाराणाम् ' इति प्रयोग एव । नहि तस्य संज्ञाशब्दत्वं विना तादृशः प्रयोग उपपद्यते । व्याख्यातं च टीकाकारैः—लडादिदशलकाराणां संज्ञाभूतोऽयमिति भाव इति । तादृशप्रयोगाद्दशोपनिषच्छब्दस्यापि संज्ञाशब्दत्वं कल्प्यत इति सर्वं शुद्धं कृत्वा शुद्धे श्रीसच्चिदानन्दब्रह्मणि समर्पयत्यमुं लेखम्—

शके. १८१९<br>
ज्येष्ठ वद्य २<br>
शुक्रवारे.

मारुलकरोपाख्यः शंकरशास्त्री—भारद्वाजः ।



ॐ तत्सद्ब्रह्मणे नमः ।

# अथ *दशोपनिषदः ।

( मूलमात्रम् ) । अथेशावास्योपनिषत् ।

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । ॐ शान्तिः शान्तिः शान्तिः ॥ हरिः ॐ ईशा वास्यमिदꣳ सर्वं यत्किंच जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥ १ ॥ कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥ असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः । ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः ॥ ३ ॥ अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत् । तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥ तदेजति तन्नैजति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥ यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चाऽऽत्मानं ततो न विजुगुप्सते ॥ ६ ॥ यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥ स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥ अन्धं तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य

---

* तदुक्तम्—ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरि ।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं दश ॥ इति ।

उ विद्यायाᳬ रताः ॥ ९ ॥ अन्यदेवाऽऽहुर्विद्ययाऽन्यदा-
हुरविद्यया । इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥
विद्यां चाविद्यां च यस्तद्वेदोभयᳬ सह । अविद्यया मृत्युं
तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥ अन्धं तमः प्रविशन्ति
येऽसंभूतिमुपासते । ततो भूय इव ते तमो य उ संभूत्याᳬ
रताः ॥ १२ ॥ अन्यदेवाऽऽहुः संभवादन्यदाहुरसंभवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥ संभूतिं
च विनाशं च यस्तद्वेदोभयᳬ सह । विनाशेन मृत्युं तीर्त्वा
संभूत्याऽमृतमश्नुते ॥ १४ ॥ हिरण्मयेन पात्रेण सत्यस्या-
पिहितं मुखम् । तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥
पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्समूह । तेजो यत्ते
रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽह-
मस्मि ॥ १६ ॥ वायुरनिलममृतमथेदं भस्मान्तᳬ शरीरम् ।
ॐ क्रतो स्मर कृतᳬ स्मर क्रतो स्मर कृतᳬ स्मर ॥ १७ ॥
अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १८ ॥
इत्युपनिषत् ॥ ॐ पूर्णमदः० शिष्यते । ॐ शान्तिः शान्तिः शान्तिः ।
इति वाजसनेयसंहितोपनिषत्संपूर्णा । इतीशावास्योपनिषत् ॥

===

अथ केनोपनिषत् ।

---

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः
शान्तिः ॥ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो

बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु । ॐ शान्तिः शान्तिः शान्तिः ॥ ॐ केनेषितं पतति प्रेषित मनः केन प्राणः प्रथमः प्रति युक्तः । केनेषितां वाचामिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥ १ ॥ श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षः । अतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ २ ॥ न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितादथो अविदितादधि । इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥ ३ ॥ यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ४ ॥ यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ५ ॥ यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ६ ॥ यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदꣳ श्रुतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ७ ॥ यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ८ ॥ इति प्रथमः खण्डः ॥ १ ॥

यदि मन्यसे सुवेदेति दहरमेवापि नूनम् । त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेष्वथ नु मीमाꣳस्यमेव ते

मन्ये विदितम् ॥ १ ॥ नाहं मन्ये सुवेदेति नो न वेदेति वेद च । यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥ २ ॥ यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ ३ ॥ प्रतिबोधविदितं मतममृतत्वं हि विन्दते । आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥ ४ ॥ इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः । भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ ५ ॥ इति द्वितीयः खण्डः ॥ २ ॥

ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त । त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥ १ ॥ तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानत किमिदं यक्षमिति ॥ २ ॥ तेऽग्निमब्रुवञ्जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ ३ ॥ तदभ्यद्रवत्तमभ्यवदत्कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥ ४ ॥ तस्मिंस्त्वयि किं वीर्यमित्यपीदꣳ सर्वं दहेयं यदिदं पृथिव्यामिति ॥ ५ ॥ तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥ ६ ॥ अथ वायुमब्रुवन्वायवेतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ ७ ॥ तदभ्यद्रवत्तमभ्यवदत्कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥ ८ ॥ तस्मिंस्त्वयि किं वीर्यमित्यपीदꣳ सर्वमाददीय यदिदं पृथिव्यामिति ॥ ९ ॥ तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकाऽऽ-

ज्ञातुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥ १० ॥ अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति । तथेति तद-भ्यद्रवत्तस्मात्तिरोदधे ॥ ११ ॥ स तस्मिन्नेवाऽऽकाशे स्त्रियमाज-गाम बहुशोभमानामुमाꣳ हैमवतीं ताꣳ होवाच किमेतद्यक्षमिति ॥ १२ ॥ इति तृतीयः खण्डः ॥ ३ ॥

सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदांचकार ब्रह्मेति ॥ १ ॥ तस्माद्वा एते देवा अतितरामिवा-न्यान्देवान्यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पृशुस्ते ह्येनत्प्रथमो विदांचकार ब्रह्मेति ॥ २ ॥ तस्माद्वा इन्द्रोऽतितरामिवान्यान्देवा-न्स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत्प्रथमो विदांचकार ब्रह्मेति ॥ ३ ॥ तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा ३ इतीन्न्यमीमिषदा ३ इत्यधिदैवतम् ॥ ४ ॥ अथाध्यात्मं यदेतद्गच्छतीव च मनोऽनेन चैतदुपस्मरत्यभीक्ष्णं संकल्पः ॥ ५ ॥ तद्ध तद्वनं नाम तद्वनमि-त्युपासितव्यं स य एतदेवं वेदाभि हैनं सर्वाणि भूतानि संवा-ञ्छन्ति ॥ ६ ॥ उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद्ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥ ७ ॥ तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि(णि) सत्यमायतनम् ॥ ८ ॥ यो वा एतामेवं वेदा-पहत्य पाप्मानम[न]न्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतिति-ष्ठति ॥ ९ ॥ इति चतुर्थः खण्डः ॥ ४ ॥

सह नाववतु । सह० वहै । ॐ शान्तिः शान्तिः शान्तिः । आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य

उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु । ॐ शान्तिः० ।

इति केनोपनिषत् । इति सामवेदीयतलवकारोपनिषत्समाप्ता ॥

===

अथ काठकोपनिषत् ।

---

सह नाविति शान्तिः । ॐ उशन्ह वै वाजश्रवसः सर्ववेदसं ददौ । तस्य ह नचिकेता नाम पुत्र आस ॥ १ ॥ तꣳ ह कुमारꣳ सन्तं दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश सोऽमन्यत ॥ २ ॥ पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः । अनन्दा नाम ते लोकास्तान्स गच्छति ता ददत् ॥ ३ ॥ स होवाच पितरं तत कस्मै मां दास्यसीति । द्वितीयं तृतीयं तꣳ होवाच मृत्यत्वे त्वा ददामीति ॥ ४ ॥ बहूनामेमि प्रथमो बहूनामेमि मध्यमः । किꣳस्विद्यमस्य कर्तव्यं यन्मयाऽद्य करिष्यति ॥ ५ ॥ अनुपश्य यथा पूर्वे प्रतिपश्य तथाऽपरे । सस्यामिव मर्त्यः पच्यते सस्यमिवाऽऽजायते पुनः ॥ ६ ॥ वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् । तस्यैताꣳ शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥७॥ आशाप्रतीक्षे संगतꣳ सूनृतां चेष्टापूर्ते पुत्रपशूꣳश्च सर्वान् । एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे ॥ ८ ॥ तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन्ब्रह्मन्नतिथिर्नमस्यः । नमस्तेऽस्तु ब्रह्मन्स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन्वरान्वृणीष्व ॥ ९ ॥ शान्तसंकल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो माऽभि मृत्यो । त्वत्प्रसृष्टं माऽभिवदेत्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे ॥ १० ॥ यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः । सुखꣳ रात्रीः शयिता वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम् ॥ ११ ॥ स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं न जरया बिभेति ।

उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥१२॥
स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि त्वं श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ॥ १३ ॥
प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।
अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतं निहितं गुहायाम्॥१४॥
लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा । स
चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनरेवाऽऽह तुष्टः ॥१५॥
तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः । तवैव
नाम्ना भविताऽयमग्निः सृङ्कां चेमामनेकरूपां गृहाण ॥ १६ ॥
त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू । ब्रह्मजज्ञं
देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति ॥ १७ ॥
त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वांश्चिनुते नाचिकेतम् ।
स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥१८॥
एष तेऽग्निर्नचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण । एत-
मग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व
॥ १९ ॥ येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति
चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥ २० ॥
देवैरत्रापि विचिकित्सितं पुरा न हि सुज्ञेयमणुरेष धर्मः । अन्यं
वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् ॥ २१ ॥
देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न सुज्ञेयमात्थ ।
वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य
कश्चित् ॥ २२ ॥ शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून्हस्ति-
हिरण्यमश्वान् । भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो
यावदिच्छसि ॥ २३ ॥ एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं

चिरजीविकां च । महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥ २४ ॥ ये ये कामा दुर्लभा मर्त्यलोके सर्वाꣳकामाꣳश्छन्दतः प्रार्थयस्व । इमा रामाः सरथाः सतूर्या न हीदृशा लम्भनीया मनुष्यैः । आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं माऽनुप्राक्षीः ॥ २५ ॥ श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः । अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते ॥ २६ ॥ न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा । जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥ २७ ॥ अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थः प्रजानन् । अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥ २८ ॥ यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्सांपराये महति ब्रूहि नस्तत् । योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥ २९ ॥ इति काठकोपनिषदि प्रथमाध्याये प्रथमा वल्ली समाप्ता ॥ १ ॥

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषꣳ सिनीतः । तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥ १ ॥ श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः । श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥ २ ॥ स त्वं प्रियान्प्रियरूपाꣳश्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः । नैताꣳ सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः ॥ ३ ॥ दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता । विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त ॥ ४ ॥ अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना

यथाऽन्धाः ॥ ५ ॥ न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥ ६ ॥ श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः । आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः ॥ ७ ॥ न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः । अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान्ह्यतर्क्यमणुप्रमाणात् ॥ ८ ॥ नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ । यां त्वमापः सत्यधृतिर्बतासि तादृङ्नो भूयान्नचिकेतः प्रष्टा ॥ ९ ॥ जानाम्यहꣳ शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् । ततो मया ना(न)चिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥ १० ॥ कामस्याऽऽप्तिं जगतः प्रतिष्ठां क्रतोरनन्त्यमभयस्य पारम् । स्तोममहदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥ ११ ॥ तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥ १२ ॥ एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य । स मोदते मोदनीयꣳ हि लब्ध्वा विवृतꣳ सद्म नचिकेतसं मन्ये ॥ १३ ॥ अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥ १४ ॥ सर्वे वेदा यत्पदमामनन्ति तपाꣳसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदꣳ संग्रहेण ब्रवीम्योमित्येतत् ॥ १५ ॥ एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् । एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥ एतदालम्बनꣳ श्रेष्ठमेतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥ न जायते म्रियते वा विप-

नायं कुतश्चिन्न बभूव कश्चित् । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ १८ ॥ हन्ता चेन्मन्यते हन्तुꣳ हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायꣳ हन्ति न हन्यते ॥ १९ ॥ अणोरणीयान्महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम् । तमक्रतुः पश्यति वीतशोको धातुप्रसादान्महिमानमात्मनः ॥ २० ॥ आसीनो दूरं व्रजति शयानो याति सर्वतः कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥ अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ २२ ॥ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूꣳ स्वाम् ॥ २३ ॥ नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥ २४ ॥ यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ २५ ॥ इति काठकोपनिषदि प्रथमाध्याये द्वितीया वल्ली समाप्ता ॥ २ ॥

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे(र्ध्ये) । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ १ ॥ यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् । अभयं तितीर्षतां पारं नाचिकेतꣳ शकेमहि ॥ २ ॥ आत्मानꣳ रथिनं विद्धि शरीरꣳ रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥ इन्द्रियाणि हयानाहुर्विषयाꣳस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥ यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥ यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा । तस्येन्द्रि-

याणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥ यस्त्वविज्ञानवान्भ-वत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति संसारं चाधि-गच्छति ॥७॥ यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ८ ॥ विज्ञानसार-थिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ९ ॥ इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ १० ॥ महतः परम-व्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥ ११ ॥ एष सर्वेष भूतेषु गूढोऽऽत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२ ॥ यच्छे-द्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि म-हति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥ १३ ॥ उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत । क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ॥ १४ ॥ अशब्दमस्पर्शम-रूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥ १५ ॥ नाचिकेतमु-पाख्यानं मृत्युप्रोक्तꣳ सनातनम् । उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६ ॥ य इमं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि । प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पत इति ॥ १७ ॥ इति काठकोपनिषदि प्रथमाध्याये तृतीया वल्ली समाप्ता ॥ ३ ॥ इति काठकोपनिषदि प्रथमोऽध्यायः समाप्तः ॥ १ ॥

===

## अथ द्वितीयोऽध्यायः ।

---

पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन् ।

कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥
पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।
अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥
येन रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान् । एतेनैव विजानाति किमत्र परिशिष्यते । एतद्वै तत् ॥ ३ ॥ स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ४ ॥ य इमं मध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ॥ ५ ॥ यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत । गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत । एतद्वै तत् ॥ ६ ॥ या प्राणेन संभवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत । एतद्वै तत् ॥ ७ ॥ अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः । दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः । एतद्वै तत् ॥ ८ ॥ यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति । तं देवाः सर्वे अर्पितास्तदु नात्येति कश्चन । एतद्वै तत् ॥ ९ ॥ यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥ मनसैवेदमाप्तव्यं नेह नानाऽस्ति किंचन । मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ॥ ११ ॥ अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि । ईशानो भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ॥ १२ ॥ अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद्वै तत् ॥ १३ ॥ यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥ १४ ॥ यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति

गौतम ॥ १५ ॥ इति काठकोपनिषदि द्वितीयाध्याये प्रथमा वल्ली समाप्ता ॥ १ ॥

पुरमेकादशद्वारमजस्यावक्रचेतसः । अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते । एतद्वै तत् ॥ १ ॥ हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ २ ॥ ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वे देवा उपासते ॥३॥ अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः । देहाद्विमुच्यमानस्य किमत्र परिशिष्यते । एतद्वै तत् ॥४॥ न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥५॥ हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । यथा च मरणं प्राप्य आत्मा भवति गौतम ॥६॥ योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ ७ ॥ य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत् ॥ ८ ॥ अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ९ ॥ वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ १० ॥ सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥ ११ ॥ एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥ नित्योऽनित्यानां

चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ १३ ॥ तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् । कथं नु तद्विजानीयां किमु भाति विभाति वा ॥ १४ ॥ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १५ ॥ इति काठकोपनिषदि द्वितीयाध्याये द्वितीया वल्ली समाप्ता ॥ २ ॥

ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत् ॥ १ ॥ यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥ भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥ इह चेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः । ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥ यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने तथा पितृलोके । यथाऽप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके ॥ ५ ॥ इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् । पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ६ ॥ इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् । सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ७ ॥ अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च । यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ८ ॥ न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ ९ ॥ यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टति तामाहुः

परमां गतिम् ॥ १० ॥ तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् । अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ११ ॥ नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा । अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥ अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः । अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १३ ॥ यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥ यदा सर्वे प्रभिद्यन्ते हृदयस्यह ग्रन्थयः । अथ मर्त्योऽमृतो भवत्येतावद्ध्यनुशासनम् ॥ १५ ॥ शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥ अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण । तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७ ॥ मृत्युप्रोक्तां नाचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् । ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥ सह नाववतु । सह नौ० वहै । ॐ शान्तिः शान्तिः शान्तिः ॥ इति काठकोपनिषदि द्वितीयाध्याये तृतीया वल्ली समाप्ता ॥ ३ ॥ इति काठकोपनिषदि द्वितीयोऽध्यायः समाप्तः ॥ २ ॥ इति काठकोपनिषत् ॥ ३ ॥

---

## अथ प्रश्नोपनिषत् ।

ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः । व्यशेम देवहितं यदायुः । ॐ शान्तिः शान्तिः शान्तिः ॥ ॐ सुकेशा च भारद्वाजः

शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाऽऽश्व-
लायनो भार्गवो वैदर्भिः कबन्धी कात्यायनस्ते हैते ब्रह्म-
परा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं
वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः
॥ १ ॥ तान्ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्येण श्रद्धया
संवत्सरं संवत्स्यथ यथाकामं प्रश्नान्पृच्छत यदि विज्ञास्यामः
सर्वं ह वो वक्ष्याम इति ॥ २ ॥ अथ कबन्धी कात्यायन उपेत्य
पप्रच्छ । भगवन्कुतो ह वा इमाः प्रजाः प्रजायन्त इति ॥ ३ ॥
तस्मै स होवाच प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स
तपस्तप्त्वा स मिथुनमुत्पादयते । रयिं च प्राणं चेत्येतौ मे
बहुधा प्रजाः करिष्यत इति ॥ ४ ॥ आदित्यो ह वै प्राणो
रयिरेव चन्द्रमा रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्ति-
रेव रयिः ॥ ५ ॥ अथाऽऽदित्य उदयन्यत्प्राचीं दिशं प्रविशति
तेन प्राच्यान्प्राणान्रश्मिषु संनिधत्ते । यद्दक्षिणां यत्प्रतीचीं यदधो
यदूर्ध्वं यदन्तरा दिशो यत्सर्वं प्रकाशयति तेन सर्वान्प्राणान्र-
श्मिषु संनिधत्ते ॥ ६ ॥ स एष वैश्वानरो विश्वरूपः प्राणोऽग्नि-
रुदयते । तदेतदृचाऽभ्युक्तम् ॥ ७ ॥ विश्वरूपं हरिणं जातवेदसं
परायणं ज्योतिरेकं तपन्तम् । सहस्ररश्मिः शतधा वर्तमानः
प्राणः प्रजानामुदयत्येष सूर्यः ॥ ८ ॥ संवत्सरो वै प्रजापतिस्त-
स्यायने दक्षिणं चोत्तरं च । तद्ये ह वै तदिष्टापूर्ते कृतमित्युपा-
सते ते चान्द्रमसमेव लोकमभिजयन्ते । त एव पुनरावर्तन्ते
तस्मादेत ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष ह वै
रयिर्यः पितृयाणः ॥ ९ ॥ अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया
विद्ययाऽऽत्मानमन्विष्याऽऽदित्यमभिजयन्ते । एतद्वै प्राणानामाय-

